श्रीचन्द्रमौलीश्वरो जयतु ॥
श्रीमहावागीश्वर्यै नमः ॥
श्रीधर्मदेवतायै नमः ॥



# श्रीचन्द्रशेखरविजयमहारत्नहारः॥



अमूल्योऽयम् ॥

श्रीमदखिलान्ध्रमण्डलमण्डनायमान प्राच्यगोदावरीमण्डलान्तर्गतश्रीमदुभयगोदावरीमध्यदेशश्रीकोनसीमखण्डतिलकायमानश्रीमुङ्गण्डापराभिधानमुनिखण्डमहाग्रहारवास्तव्येन 'श्रीधर्मस्थापक, विद्वत्कविरत्न, वैयाकरणकेसरि, धर्मोपन्यासकेसरीत्यादिबिरुदाङ्कितेन, अखिलान्ध्रदेशधार्मिकपण्डित परिषत्प्रधानमन्त्रिणा, श्रीमत्पुल्योपनामकोमामहेश्वर शास्त्रिणा सङ्ग्रथितः ॥



श्रीमत्परमहंसपरिव्राजकाचार्यवर्येत्यादि १००८ निखिलबिरुदावलीविराजमानश्रीकाञ्चीकामकोटिपीठाधीश्वरश्रीजगद्गुरु श्रीश्रीश्री चन्द्रशेखरेन्द्रसरस्वतीसंयमीन्द्रश्रीचरणसरोरुहसन्निधिसमर्पितः ॥

प्रबन्धप्रणेत्रैव प्रकाशितः ॥

भट्नविल्लिश्रीशारदामुद्रणालये तदधीशैः 'न्यायवेदान्तविद्यापारीणैः बुलुसु अप्पन्नशास्त्रिभि मुद्रापितः ॥
प्रमाधिवर्षश्रावणशुक्लदशमीगुरुवासरः ॥

क्री ॥ १९३९ सं ॥



श्रीकाञ्चीकामकोटिपीठाधिनाथाः १००८ श्री श्री श्री
चन्द्रशेखरेन्द्रसरस्वतीसंयमीन्द्रश्रीचरणाः ॥



श्लो॥ श्रीचन्द्रशेखरयतीन्द्रसरस्वतीभ्यः श्रीकामकोटिमठपीठमहाविभुभ्यः,
श्रीभारतीधरणिदेशिकपादुकाभ्यः भक्त्यार्पितोऽय मुपहारकरम्बहारः ॥

श्रीचन्द्रमौलीश्वरो विजयते ॥

श्रीमहावागीश्वर्यै नमः ॥

श्रीधर्मदेवता विजयताम् ॥

# श्रीचन्द्रशेखरविजयमहारत्नहारः॥



श्री कविताकुमार्युपदेशदशश्लोकी ॥

श्रीमत्पुल्योपनामकोमामहेश्वरशास्त्रिसंग्रथिता ॥



श्लो ॥ नमोस्तु धर्मविध्वंसिदुष्कलौ तत्प्रगुप्तये,
शङ्करा यावतीर्णाय चन्द्रशेखररूपतः ॥१॥

मातः! श्रीकविताकुमारि रसिके कालं कियन्तं चरं
रान्ध्रे दुष्कलिदुर्विलासवशगस्वान्तार्यमर्त्यावृते,
गैर्वाणी बुधलालनयिसुगुणा खिन्नाऽपमानव्रजै
स्सर्वज्ञं भज! चन्द्रशेखरगुरूत्तंसं कृतार्था भव ॥२॥

यः श्रीद्वापरसन्धिभाजि जनताधर्माविके ऽनेहासि
श्रीमत्पञ्चसहस्रवत्सरमिते याते कले श्वाष्ठितम्,
दुष्टं वीक्ष्य निजप्रभुत्वकलना योदूयुक्त मीशः पुनः
धर्मोद्धारकचन्द्रशेखरयतिः भूत्वाऽवतीर्णो भुवि ॥३॥

सोयं दुष्कलिदुष्टचेष्टितयुतैः दुस्संस्कृतिच्छद्मभिः
धर्म्यार्यव्रजसङ्करापकदुरुद्योगै रधर्माचिते,
धर्मक्षोणितलेऽत्र दुर्मतपरिव्याप्ते दुराशान्विते
म्लेच्छप्रायजनावृते ऽजनि जग त्संरक्षितुं धर्मतः ॥४॥

साङ्गाम्नाय समस्तदर्शनकलाशालाप्रतिष्ठापकः
तत्तत्त्वाभ्युपदेशनामृतरसप्रस्रावक स्सन्ततम्,
धृत्वा देशिकचन्द्रशेखरवपु श्श्रीकामकोटीमहा
पीठे तिष्ठति शङ्करोऽखिलजग ज्जित्वा स्वशक्त्याधुना ॥५॥

पाण्डित्यं निगमागमाद्यखिलसद्विद्यासु सत्कौशलम्
भाषा स्वार्यकलासु चा द्भुततमं चातुर्य मावर्जने,
लोकानां निजधर्मचारणविधौ शक्तिश्च लोकोत्तरा
दक्षत्वं कलिनिग्रहेऽद्भुततमं तत्प्राभवं निस्तुलम् ॥६॥

तत्प्रादुर्भवनादि तत्कृतजगद्धर्मावनार्यावनी
जैत्रप्रस्थितिमुख्यपावनकथासारं तदंघ्र्यादिकम्,
साष्टाविंशतिपद्यरत्नशतके नाभीष्टसन्धायिना
संवर्ण्याढ्यरसोत्तरोक्तिनिकरे णावर्ज्य धन्या भव ॥७॥

न ग्राम्यान्ध्रवचोमयी नच पुन र्हौणी नवा यावनी
नैवा स्यम्ब! जगत्प्रतारणचणा नो हीनसेवारता,
नत्वं गर्हितवृत्तिभि र्गमयितुं स्वां जीविका मिच्छसि
श्रीमातः! कविते कथं कलिभृतेऽत्रान्ध्रे द्रियेथा जनैः ॥८॥

धर्म्यां वाच मुदीरय स्यपिहितां संसत्सु नैव प्रिया
मौदन्ती ष्वपि पत्रिकासु नितरां कालेयलीलाकुले,
स्वैराचाररतेऽन्ध्रलोकनिकरे गीर्वाणगीः गौरव
न्यूने रस्यभवद्वचांसि शृणुया त्कोवा विना श्रीगुरुम् ॥९॥

श्रीकांचीनगरीविराजितशुभश्रीकामकोटीमहा
पीठाधीश्वरचन्द्रशेखरधराचार्यपादांबुजम्,
नत्वा श्रीकविताकुमारि कल यैतेषां कथां पावनीम्
साष्टाविंशतिपद्यरत्नशतके नाभीष्टसिद्धिं व्रज ॥१०॥

श्रीचन्द्रशेखरजगद्गुरुसार्वभौम
पादारविन्दकरुणामकरन्दपानात्,
नीत्वैहिकानि कविते ऽत्र सुखा न्यमुत्रा
प्यासाद्य मुक्तिवनितासहकृत्वरी स्याः ॥११

इति कविताकुमार्युपदेशदशश्लोकी ॥

———

सर्वापद्विनिवारणाय भुवने धर्मप्रतिष्ठाप्तये
शर्वांशेन धरावतार मनुगृ ह्यासेतुशीताचलम्,
गर्वान्धा न्परिजित्य पण्डितवरा न्शास्त्रार्थबोधै र्धरा
गीर्वाणा न्निजपादपीठविलुठ न्मूर्ध्नोऽतनोत्तं नुमः ॥१॥

कावेरीसरित स्तटेऽमृतघटेशावासभूदेवता
साहस्राश्रितकुम्भघोणनगरावासि स्वपूर्वाश्रितः,
श्रीमद्विष्णुपुरे विलुप्पुरसमाख्याने द्विजात्यग्रणी
स्सुब्रह्मण्यसुधी रुवास स महालक्ष्म्या सुसाध्व्यान्वितः॥२॥

श्रीकर्णाटकहोयिस ल्समभिधा नाडीच शाखा र्चिकी
गोत्रं हारित माश्वलायनमुने स्सूत्रञ्च यस्याभवत्,
तस्य श्रीशिवतत्परस्य तपसा गौरीरताया स्सदा
तस्या स्स्वप्न उमापति स्स्वसुततां प्रीत्यान्वगृह्णात्स्वयम् ॥३॥

काले ऽथातिशिवङ्कर जठरगे शैवे महातेजसि
द्रष्टु र्दृष्टिहरेण तेन महसा व्याप्तैः प्रतीकै स्सती,
गर्भाङ्कै रखिलैः क्रमेण वितता सा गुर्विणी सत्पते
र्बन्धूनां जगतोऽखिलस्य च मुदं लोकोत्तरा मातनोत् ॥४॥

मासे सा दशमे जगच्छुभकरे श्रीशालिवाहश्शके
वायुक्षोणिवसुक्षपाकरमिते जिष्णौ जयाब्दे शुभे,
वैशाखासितपक्षसत्प्रतिपदि प्राभाकरे वासरेऽ
नूराधर्क्षयुतेऽभिजित्समयगे सिंहे त्वसूतात्मजम् ॥५॥

तुङ्गस्थे भृगुनन्दने सुरगुरौ सार्केन्दुजे राज्यगे
भूपुत्रे च कलत्रगे व्ययपतौ चन्द्रे च नीचङ्गते,
मन्दे वित्तगते ध्वजेन सहिते राहौ च शुक्रान्विते
धर्मोद्धारकचन्द्रशेखरगुरुं सासूत सूनुं शिवम् ॥६॥

जातं वीक्ष्य शिवाकृतिं स्वमहसा सूत्यालयद्योतिनम
धन्यं नः कुल मेव नेय मवनी धन्याखिलानेनतु,

इत्यानन्द्य तत श्चकार विधिना तज्जातकर्माञ्जसा
सुब्रह्मण्यसुधी र्धनं बहु ददौ भूदेवताभ्यो मुदा ॥७॥

षष्ठ्यर्चां प्रविधाय षष्ठदिवसे दिव्येह्नितु द्वादशे
सर्वाधीश्वरतां निरीक्ष्य विदधौ श्रीस्वामिनाथाभिधाम्,
संस्कारा नखिलां स्ततोर्हसमये ष्वाधाय शास्त्रोदितान्
तल्लीला अनुभूय चाष्टमसमे तात स्स चक्रे द्विजम् ॥८॥

आम्नायाध्ययनाय देशिकवराभ्यर्णं गतो लीलया
गृह्ण न्साङ्ग मुपाङ्गवै श्श्रुतिचयं स त्वेकसन्धा दिशा,
आचार्यं प्रतिभाविशेषकलितो विस्मापयन् पञ्चभि
र्वर्षै रेव सरस्वतीश्रयणतो जग्राह विद्या स्समाः ॥९॥

बाल्ये भाषणतः प्रभृत्यभिहितं सोऽहंवचस्सन्ततम्
श्रुत्वाऽपूर्ववचांसि चास्य सुधियो लीलाश्च लोकोत्तराः,
दृष्ट्वा ज्ञान मनुत्तमं च बहुलां मेधा ममुं विस्मित
स्वान्ता ज्ञाननिधिं शिवं स्वय मिहोदीतं समे मेनिरे ॥१०॥

इत्थं दुष्कलिनिग्रहाय भुवने धर्मप्रतिष्ठासये
साक्षा च्छर्व मिहावतीर्ण मुपलब्धाशेषसंस्कारकम्,
संप्राप्ताखिलविद्य मात्त निजचिच्छक्त्यात्मबोधं स्वयम्
ज्ञात्वा देशिकसार्वभौमपदवीपूर्णाभिषेकोचितम् ॥११॥

श्रीकांचीपुरकामकोटिविलसत्पीठाधिनाथा महा
देवेन्द्रार्यसरस्वतीमहितसत्पादा स्समाहूय ते
सन्न्या स्यात्मदिशो पदिश्य च महावाक्यानि चत्वा यथा
सीनं स्वै रभिषिच्य पूर्णकलशैः पीठे प्रभुत्वं ददुः ॥१२॥

साक्षा च्छम्भुनवावतारकलनां वीक्ष्यास्य धर्मोद्धृतौ
कालेयाखिलदुर्विलासनिवहभ्रष्टार्यधर्मे त्विह,
इन्द्रान्तर्गतचन्द्रशेखरसरस्वत्याह्वयं देशिकः
पीठप्राभवयोगपट्टकलनेऽन्वर्थं ददौ श्रीगुरोः ॥१३॥

पारिव्रज्यजगद्गुरुत्वविलसत्साम्राज्यसिंहासना
विष्टाना द्वयसि त्रयोदशसमे ब्राह्मीरमातेजसोः,
आवेशा दखिलेशशक्तिकलिता देकात्मतापत्तिम्
त्सूर्यत्विट्समदिव्यधामकलितो रेजे जगद्देशिकः ॥१४॥



श्री चरणारविन्दनक्षत्रमाला ॥

यत्पादाम्बुजदर्शनेन मनुजा मुक्ता निजाघव्रजात्
यत्पादाम्बुजवन्दनेन निखिलै श्शोकै र्विमुक्ता जनाः,
यत्पादाम्बुजसेवया भवभुजो मुक्ता अविद्यावृतेः
यत्पादाम्बुजपूजनेन सुजना स्सिद्धाः पुमर्थे ष्वलम् ॥१५॥

यत्पादाम्बुजवर्णनेन कवय स्सारस्वताधीश्वराः
यत्पादाम्बुजभक्तितो बुधगणा वाचस्पतित्वं गताः,
यत्पादाम्बुजसंश्रया न्नृपतय स्साम्राज्यलक्ष्मीजुष
स्सर्वश्रीप्रदचन्द्रशेखरपदाम्भोजं त दम्बाश्रय ॥१६॥

संसारे सुखसारलेशरहिते हिंसैकसारे भृशम्
कं? सारं प्रसमीक्ष्य नौषि कविते पुंसो रिरंसून् भवे,
हंसानन्दरसोर्मिबोधसरसीहंसावतंसाश्रितम्
संसारापहचन्द्रशेखरगुरूत्तंसांघ्रिपद्मं भज ॥१७॥

यत्पादाम्बुजचिन्तनं सुमनसा मिष्टार्थसंसिद्धिदम्
दुष्टाज्ञानघनान्धकारविषयव्यालालिदष्टात्मनाम्,
भ्रष्टाना मपि सर्वधर्मनिवहा त्कष्टापकृष्टात्मनाम्
शिष्टानां वचनं भजेष्टगतये जुष्टात्मविश्वाशिनी ॥१८॥

सारूप्ये जडपङ्कजं स्वतपसा प्राप्ते प्यतृप्य त्पद
स्सायुज्यं लषदात्मनो यतिविभुद्वारा समीपं गतम्,
लब्ध्वा तन्नखचन्द्रतो निजचितिं नालात्मबन्धं परि
त्यज्याऽवाक्पतितं पदे तव विभो स्पर्शा द्विलिल्ये स्वयम् ॥१९॥

पद्मं त्वत्पदरूपतः परिणतं पञ्चांगुलीभि र्दलैः
लक्ष्म्या साक मशेषभूतलबुधानन्दाय बोधामृतैः,
आत्मारिञ्च कलानिधिं निजसिर स्स्वास्थाप्य पञ्चीकृतम्
स्वान्तश्शतृजयं विवेकजनितं सुव्यञ्जय दृभ्राजते ॥२०॥

लक्ष्मी स्त्वत्पदकञ्जयो र्निवसती त्येत न्न चित्रीयते
वासस्थानतया विनम्रजनतादारिद्र्यहन्त्रीतिच,
किन्त्वेत द्द्रवरक्तभक्तवितते भोगेऽर्थकामाश्रिते
वैराग्यं सुदृढं विधाय भवतो धत्ते विमुक्तौ रतिम् ॥२१॥

स्वीयां पङ्कजता मनीक्ष्य जलजं नत्वाभिदं कर्मणाम्
बन्धं बीजचयं च हृद्गत महन्ताया स्त्वदंघ्रे र्विभो,
तादात्म्याय बुधेन्द्रहस्तमुखत स्सामीप्य मेत्य स्वयम्
वीक्ष्यैत त्सुषमा मधोगत ममुं रेखात्मना सेवते ॥२२॥

पद्मं त्वत्पद मामनन्ति सुधियो भ्रान्त्या रुचे र्मार्दवात्
सम्फुल्लं न भवे न्नखेन्दुसविधे चे त्तज्जगद्देशिक!,
धात्रा लोहितरत्नसार मपकृष्यापूर्य चिन्तामणिम्
बोधेन्दूपलमूर्धगं मनुमहे सृष्टं श्रिताभीष्टदम् ॥२३॥

आम्नायागमसत्कलामयमहावाणीविभूतिव्रज
भ्राजद्बोधमणीविभूषणभृतां माणिक्यमञ्जूषिकाम्,
अग्रेन्दूपलराजितां तललसत्पद्मादिरेखांचिताम्
अंघ्रिं ते कवयो वदन्ति कमलं मुग्धा श्श्रितज्ञानदम् ॥२४॥

नानादेशनृपालमौलिवसते स्साम्राज्यलक्ष्म्याश्रयात्
रत्नप्राभवकीर्तितोऽपि नितरां शोणो मणि र्गर्वितः,
श्रुत्वा त्वत्पदकीर्ति मेत्य मकुटे जेतुं पदो मस्तके
बद्धात्मा पतदंजसा तव पदं तद्धाम हृत्वा जहौ ॥२५॥

पद्मे कोकनदे प्यशोककुसुमे मन्दारबन्धूकयोः
पाटल्यादिषु भिन्नभिन्नरुचिता ग्लानिप्रजाड्यादिभिः,

शेषे श्शोणमणीगणेषु कठिनात्मत्वादिभि स्त्वत्पदम्
निर्दोषाढ्यगुणास्पदं निरुपमं विज्ञानदीपं विदु: ॥२६॥

किञ्चैतेषु न शक्ति राश्रितजनाभीष्टार्थदा दृश्यते
त्व च्छ्रीपादयुगे तु रागिजनताधर्मार्थकामप्रदा,
शक्ति स्सास्ति विरागिणां तु निखिलाऽविद्यावृतिध्वंसिनी
विद्यादिव्यमरीचिभि र्भवभुजां बन्धं दहन्ती त्विमो ॥२७॥

त्वत्पादाब्जरजांसि लब्धु मखिला मर्त्याधिपा स्सम्भ्रमात्
गत्वा तत्र यतीन्द्रवन्दनशतश्रेण्यावकाशाशये,
तिष्ठन्तो बहुकाल मन्तर मवा प्यादीप्य मौलिस्फुर
द्रत्नालयंशुचयै स्सुवर्णकुसुमै सम्पूज्य बिभ्र त्यलम् ॥२८॥

त्वत्पादाम्बुजचिन्तनेन विबुधव्राता: पुनन्तो गिरम्
वित्तोन्मत्तगृहस्थाचित्तकलनाय तात्मचित्तोद्भवै:,
कल्पे रल्पितकल्पपादपगुणै र्जल्पै रनल्पै र्युतै:
आत्मीयां मलिना मुदञ्चितरसस्तोमेन धन्या इह ॥२९॥

त्वत्पादाम्बुजवर्णनेन वसत स्तार्णेषु पार्णेषु वा
जीर्णे ष्वर्णवपूर्वजादततनु ष्वाशीर्णदुर्वेश्मसु,
सद्वर्णोदितलब्धवर्णनिक रस्याचर्णिदुष्टैनस:
स्वर्णश्रीपरिपूर्णवर्णविलसत्सौधेषु वासो मुदा ॥३०॥

तीर्णो स्त्वार्यकलासु वाङ्मयानेरुत्तीर्णोऽस्तु जीर्णोऽस्तु दु
श्शीर्णै: कर्मभि रिन्दिराकरुणया पूर्णोस्तु कीर्णोस्तु वा,
प्राणै र्णवमेखलाविपत योदीर्णोस्तु शीर्णोस्तु वा
पूर्णो यच्चरणामृतेन विपदुत्तीर्णोऽस्युदीर्णोदय: ॥३१॥

चित्रं त्वत्पदपङ्कजन्मरजस स्सङ्गेन यद्देहिनाम्
नानाजन्मनिकायसञ्चितरज:कोट्योऽपयान्ति द्रुतम् ,
जाड्यं चात्मगतं व्यपैति विषयासक्ति र्विवेकेन्दुना
सम्बन्धोखिलवाग्विभूतिकलना दिव्यात्मशक्त्यागम: ॥३१॥

भक्ति र्मेस्तु भवत्पदाम्बुजयुगे प्राकाम्यदाऽव्याहता
रक्ति स्त्वत्पदचिन्तनेस्तु निबिडाज्ञानान्धकारापहा,
सक्ति स्त्वत्पदपद्मवन्दनविधौ संसारतापापहा
मुक्ति र्मेस्तु भवत्पदाब्जभजना त्कर्मावलीबन्धतः ॥३३॥

धन्या स्ते धनिन स्सुवर्णकुसुमै स्त्वत्पादपङ्केरुह
द्वन्द्वं ये परिपूजयन्ति निखिलाभीष्टार्थसिद्धिप्रदम्,
धन्या स्तेपि बुधा स्सुवर्णकुसुमै र्येवार्चयन्तीह तत्
मान्या स्तुल्यफलाप्तितोऽत्र त इति श्रीमद्गुरो मन्महे ॥३४

आकृष्याखिलशक्तिसार मपकृष्याशेषतेजोत्रजम्
संकृष्याखिलबोधसार मुदरे निक्षिप्य युष्मत्पदम्,
धात्रा शोणमणिप्रसूनरुचिसम्मिश्रप्रभैः पल्लवै
राढ्यैः पञ्चभि रग्रसूचितलवै स्सृष्टं महिम्नां पदम् ॥३५

नोचे त्पल्लवता किसालयचयेऽन्वर्था कथं वा भवेत्
त्वच्छ्रीपादलवाश्रियैव खलु सा स्या त्तत्र युक्ता विभो,
एते नैव भवत्पदं किसलयं पञ्चाग्र मार्यो ब्रुवन्
प्रत्युक्तो जडरूपणं त्वनुचितं सर्वज्ञपीठे पदे ॥३६॥

राज्ञां मौलिषु सार्वभौमपदवीं धत्ते धृतं भक्तितः
विज्ञानां तु विमुक्तिवैभवपदं तत्त्वावभासेन यत्,
अज्ञाना मखिलार्थदानमुखतो भुक्तिंच भक्तिं भवे
प्राज्ञानां परमार्थभासनदिशा भव्यां विरक्तिं भवे ॥३७॥

हन्त्वाम्नायविदो द्विजन्मनिवहान् मुष्णातु हेम्नश्शयम्
चूष त्वाढ्यघटीमितासवझरीं म्लेच्छै स्सहान्त्यै र्जनैः,
दारा न्गच्छतु वा गुरो श्चरतु वा संसर्ग मेतै स्सदा
त्वत्पाब्जदर्शिक्रियाऽघशमनी पूता न्विधत्तेऽपितान् ॥३८॥

पद्मे पङ्कजता जडस्थितिरजस्सन्धारणे म्लानता
संसर्गोपि जडै स्सदा द्विजपतिद्वेषोऽपटुत्वं गतौ,

एकाहस्समयप्रभाप्रभृतयो दोपा गुणा अल्पका:
विशे रसर्वगुणास्पदं तत्र पदं तेनोपमीयेत कैः ॥३९॥

नोदत्ते कमलं श्रिय श्रितवतां हृद्यानवद्यां तथा
त्रियां वा न तु वान्यकामनिवहं तापत्रयोन्मूलने,
का? नामाऽत्र कथा भवार्णवतरिप्रज्ञानसन्धापनम्
दूरे सर्वपुमर्थदार्यचरणे नेदक्कथं स्या त्समम ॥४०॥

स्वीयाथस्थिति मत्र सर्वविषये घ्यार्याङ्घ्रिन स्सर्वधा
सर्वाभीष्टदसर्वशक्तिकलिता त्सर्वाघविध्वंसकात्,
ज्ञात्वात्मद्युतिनार्दिवपदुपमासाम्येन गत्वा स्वयम्
रेखारूप मुपेत्य तत्तल महो पद्मं सदा सेवते ॥४१॥

दिव्याखण्डमहाविभूतिकलितश्रीपादसंसेवनात्
अप्यैकांतिकभक्तितो जडजयो रेखानखोपाधितः,
प्राप्ता पद्मशशाङ्कयो रनुपमा कीर्तिर्जनाह्लादने
लक्ष्मीवासतया सुधानिधितयाऽन्येषां किं मिष्टोदये ॥४२॥

नानादेशमहामहीपमहितश्रीनाथविश्वम्भरा
विख्याताखिलविश्वविद्यविबुधाधीशाढ्यहृत्तर्पकः,
यत्र श्रीमहिमा विराजतिमहामोहापहारी सताम्
विज्ञानैकघनं तदार्यचरणद्वन्द्वं श्रयन्तां जनाः ॥४३॥



श्री हृ द या दि शि रो न्त न क्ष त्र मा ला ।

धात्रा हृत्कमलं शमादिदलकं नानाकलाकेसरम्
कारुण्यैकमरन्दपूर्ण मखिलाम्नायावलीकार्णिकम्,
विज्ञानैकरसं विशुद्धगुणकं चातुर्यतेजोश्चितम्
नानाशक्तिसमूहनाल ममलं सृष्टं नवं ते गुरो! ॥४४॥

कामाद्यान्तरशत्रवोत्र न नवा तृष्णादयो नापिवा
दुष्टाः काश्चन वासना नच पुन दुष्टेषणानां त्रयम्,

नोतापत्रयसङ्गगन्ध इह नो चाञ्चल्य मात्रिधिकी,
वार्ता नो कथ मन्यथा स्यु रिह नात्मानन्दगन्धावृते ॥४५॥

न्यस्तो यस्य तु मस्तकोपरि भवद्धस्तो भवाब्ध्यूर्मिति
स्त्रस्तस्वीयसमस्तशक्तिनिवहव्यस्तो निरस्तोहकः,
अस्तोकैहिकमोहबाडबपरिध्वस्तोपि तापत्रय
त्रस्तोऽस्तङ्गतसंसृति स्स भवति ध्वस्तात्मबन्धः पुमान् ॥४६॥

शिष्टो वा निगमागमान्तरसवि दूभ्रष्टोऽस्तु वा सर्वतः
दुष्टो वा गुरुपातकैः कुविषयाकृष्टो विनष्टात्मवान्,
दष्टो मोहमहाहिनाऽर्थविषसंसृष्टो विसृष्टात्मशुक्
स्पृष्टो यत्करपङ्कजेन भवविभ्रष्टो विनष्टाचितिः ॥४७॥

शङ्खाकारशिरोधरानुगतया हृत्पद्मसंलग्नया
गौरीशङ्करमालया प्रकृतिपुंभेदप्रथाऽऽविधिकी,
मार्ताण्डप्रभयो र्जलोर्मिगणयो र्ज्योत्स्नासुधांश्वो रि
वाऽद्वैतं तात्त्विकमेतयो रिति भवत्कण्ठोऽभिवक्ति स्फुटम् ॥४८॥

सन्ध्यानां त्रितये प्यवन्ध्यफलके श्रीराजराजेश्वरी
योगश्रीयुतचन्द्रमौलिमिथुनश्रीमत्सपर्याविधौ,
जप्यश्रीप्रणवादिसज्जपविधौ शिष्याभयासञ्जने
यद्व्यापारपरम्परा सरति तत्पाण्यम्बुजं ते नुमः ॥४९॥

साङ्गोपाङ्गकलां त्रयी मनिश मप्यन्तर्वसन्तीं स्फुर
द्रेखाणां त्रितयेन तावकगलो व्यक्तं व्यनक्ति स्वयम्,
वाणी सा तु तदीयसार मखिलं संगृह्य वर्णात्मना
शिष्यौघाय ससम्प्रदाय मनिशं सम्बोधय त्युद्गता ॥५०॥

साङ्गाम्नायसमस्तदर्शनकलाभाषामयूखै र्महा
बोधानन्दसुधारसैकलहरीनिष्यन्दिभि स्सन्ततम्,
चन्द्रो यद्वदनात्मना परिणत स्स्वाङ्कापनोदेहया
लोकाना मिह दुर्मताविलहृदां तत्त्वामृतं यच्छति ॥५१॥

श्रीवाण्योस्तु मिथो द्विषो रिह विभिन्नाम्भोजधाम्नो स्सहा
वासा त्कोकनदाम्बुजारिसहसंवासा न्न पद्मं मुखम्,
नो चन्द्रोऽपि कलानिधित्वकलित स्त्वद्व्यधिष्ठानत:
नित्यश्रीवसतेश्च नैव च रविः किञ्चि न्महोमण्डलम् ॥५२॥

सर्वज्ञानसमस्तशक्तिसमधिष्ठानं समष्ट्यात्मकम्
ब्राह्मं दुष्कलिदुर्मतप्रशमनद्वारा जगद्रक्षितुम्,
धर्मब्रह्मरहस्यबोधनसुधासेकै स्सुखाधायकै:
उद्भूतं गुरुसार्वभौममुखत स्तापत्रयोन्मूलकैः ॥५३॥

मायावीचिमिषद्भवाब्धिविषयग्राहै गृहीता महा
मोहव्यग्रहृदो मनोरथमहावर्तैः परिभ्रामिताः,
तत्कृष्टा स्तलगा स्स्वनाशचाकता दैवस्मृते स्त्याजिताः
उन्मज्याम्भसि यन्मुखेक्षणवशा त्तीर्णा भवाम्भोनिधिम् ॥५४॥

लक्ष्मी र्यद्वदनाश्रया स्वचलतामुख्यापवादं मुहुः
हन्तुं लोकगतं स्थिरा प्रदिशति स्वानुग्रहं च स्थिरम्,
द्रष्टृभ्यो नितरां वधू रपि विधे र्वैरं विहा यानया
किंवा मार्षमयीं दिशत्यनुकलं स्थित्वात्मने ह्या निशम् ॥५५॥

पादाभ्यां हृदयेन पाणियुगले नास्येन नेत्रद्वये
नापि स्वे प्रतिपक्षतां वहति ते रुच्यादिभि स्स्वै र्गुणैः,
पद्मे योद्धु मुपागतेऽपि कृपया त्वेकाकिनि त्वन्मुखम्
नेत्राभ्यां शम माकलय्य विजहौ संकृष्य तत्सद्गुणान् ॥

फाले ते गुरुसार्वभौम विलसद्रेखात्रयं भूतिमत्
व्यक्तं व्यञ्जयतीह चेतनमहामायेशशुद्धात्मनः,
भिन्ना न्भेददृशा मुपाधिविलये चैका न्विदां दर्शय
त्सामानाधिकरण्यतोत्र सकला श्शक्तीः प्रभारूपतः ॥५७॥

ध्येये ब्रह्मणि चित्तवृत्तिविलयैकाग्र्यार्जकै रात्मनः
प्राणायाममुखै र्मनोविजयिभि स्संसाधितुं चैकतां,

ब्रह्मानन्दरसानुभूतिफलिकां मायासमुन्मूलनीं
नासायुग्ममुखेन योगकलना मासाद्य भ्राजते ॥५८॥

अन्तश्शतृजयाय दुर्जयमहामायाविनाशाय च
भ्रूव्याजेन धनुर्द्वयं विनिहितं धात्रा मुखे मन्महे,
तूणीरद्वय मध्यधोऽत्र नयनव्याजा च्छमादीषुभिः
पूर्णं दिव्यमितोन्यथा कथ मिदं दृष्ट्वा विधावन्ति ते ॥५९॥

ज्योत्स्नांकूरितरक्तपल्लवपुटे भासेत चे न्मल्लिका
माला विद्रुमपेटिकोपरि धृता कर्पूरमालापिवा,
श्रीमच्छोणमणीगणोपरिधृतश्रीहीरकश्रेणियु
ग्भूषा मे भजतां तवाधरलसन्मन्दस्मिते नोपमाम् ॥६०॥

चित्रं त्वद्वदनेन्दुमण्डलविनिर्गच्छत्स्मितज्योत्स्नया
सार्कं सूक्तभिधानमौक्तिकमणिश्रेणी विनिर्गच्छती,
सा तु श्रोत्रगता प्रविश्य हृदयं भूत्वा सुधात्मा नृणाम्
आनन्दं जनय त्यनन्यसदृशं तापत्रयोन्मूलकम् ॥६१॥

त्वद्वाचां प्रसरे प्रबोधजनके प्राढ्येषु षड्दर्शनी
सारग्राहिषु सर्ववेदसमयादर्शि प्रशेषै रसैः,
ब्रह्मानन्दरसानुभाविषु महामोहापहेषु द्रुतम्
को नामेच्छति पारलौकिकसुधां यच्छत्सु तत्त्वामृतम् ॥६२॥

चित्रं त्वद्वदनोद्गतोक्तिलहरीनिर्यत्सुधामाधुरी
संस्वादेन चिरायु राप्रतिदिशत्पीयूषमात्राशिनाम्,
देवाना मपि दुर्लभेन सकलानन्दातिगः देहिनाम्
ब्रह्मानन्दरसानुभूति रतुला प्राप्नोति भूमौ बुधाम् ॥६३॥

त्वन्नेत्रद्वितया दपाङ्गसरणिव्याजेन वाणीरमे
प्रादुर्भूय भवाच्छ्रितावलिसमाश्लेषं दधाते द्रुतम्,
भ्रूमध्याक्षिमुखा त्तावारिषु पुन स्त्वेका भृकुट्यात्मनो
दीता शक्तिरिमे निवारयति ते सौदामिनीवाञ्जसा ६४

यस्मि न्नास्यगता कटाक्षसरणि दीने पते देकदा
कारुण्यैकसुधामयी स तु भवे च्छ्रीवाग्विभूत्यञ्चितः,
भक्तेत्वैहिकपारलौकिकसुखावाप्ति विरक्ते स्थिते
संसारोत्तरणं सुमुक्तिमहिलानन्दानुभूतिः परा ॥६५॥

मुण्डीमस्तक एष ते जग दिदं मिथ्येति तत्त्वस्थितिम्
बृते ब्रह्मपदे सहस्रदलके पद्मे परं ब्रह्म तत् ,
चिच्छक्त्या सह मेधया निजसुखं भुङ्क्ष्व स्त्वया मायया
शाठ्याचावृतमङ्गमोहनकृते धत्ते सदा लीलया ॥६६॥

शम्भुप्रीतिकरप्रदोषदिवसप्रादोषिकार्चा महा
न्नेहोधारितरुद्रनेत्रमकुटे नालंकृतं ते शिरः,
दृष्ट्वा कस्य मनोऽत्र तर्कयति नो साक्षा च्छिवं योगिनम्
लोकोद्धारकृतेऽवतीर्णं मवनौ त्वां संयमीन्द्र! प्रभो! ॥६७॥

भक्तच्छात्रकृतेषु जानपदसञ्चारोत्सवेषु प्रभो!
कौशेयांशुकदिव्यभूषणगणालङ्कारिते हस्तिनि,
आसीनस्य महामणिस्थगितसत्सौवर्णमौलिस्फुर
न्मूर्धा ते जगदीशतां विशदय त्यात्तेशचिह्नावलेः ॥६८॥

ब्रह्मीभूतयतीन्द्रचन्दिरमहादेवेन्द्रभूदेशिक
श्रीमत्पाणिपयोजपावनतलस्पर्शा त्परब्रह्मणः,
यस्य ब्रह्मपदे प्रवेशवशतो नष्टात्वविद्यावृतिः
देहोपाधिपरिग्रहा दुपगता प्राप्ता परब्रह्मता ॥६९॥

यस्मि न्संयमिशेखरार्पितसुमा न्याभांति नक्षत्रवत्
यस्मिन् श्रीशसुवर्णपुष्पनिवह स्सौवर्णमौलीयते,
यस्मिन् भूपसमर्पितो मणिगणो माणिक्यमौलीयते
तस्मि न्मेऽस्तु सुवर्णपुष्पनिवह श्श्रीमद्गुरो र्मूर्धनि ॥७०॥

दण्डं दण्डयितुं कलिं सह बलं तेजो दधानं परम्
ब्राह्मं धर्मततिप्रतिष्ठितिकृते श्रीदेशिकेन्द्र स्तव,

हस्तं दिव्य मनीनय त्रिजगतीरक्षाकरं भूमिका
स्सप्तव्याहृतिरूपिणी स्सुदधतं मुक्त्यङ्गनावेश्मनः ॥७१॥

दण्डे नात्मकराञ्चितेन महसांधाम्ना वशां चित्कलाम्
मायां लोकविमोहिनीं गुणमयीं बद्धां निजाग्रांशुके,
कौशेयेन च सूत्रकेण सुदृढं संवेष्टय तां सप्तभे
पर्व ण्यग्र इतश्च निर्गुणमह स्त्वं दर्शय स्योम्मयम् ॥७२॥

अन्तेवासिमुमुक्षुवर्गसमधीकाराश्रया भूमिकाः
सप्तस्वीयसुपर्वभिःक्रमगते स्सोपानभूतै स्स्वयम् ,
श्रीमन्मुक्तिवधूटिकामणिमहासौधायमानो निजो
दण्डो ब्रह्मपरं व्यनक्ति शिखरे स्वीये स्थितं तेजसा ॥

अज्ञाना त्सुखवर्त्मनः कुविषयानेकद्रुषण्डावृते
मोहध्वान्त मलीमसे कुवृजिनव्याघ्रादिहिंसावृते,
विज्ञानप्रसभापहारिबलवत्कामादिचौरान्विते
दण्डस्तेऽवति बिभ्यतं भवमहारण्ये भ्रमन्तं भयात् ॥७४॥

धर्मो येन महाकला विह पुन स्सम्यक्प्रतिष्ठीयते
यस्मै संयमिचन्द्र वन्दनशतश्रेणी सदा राजते,
यस्मा ज्जीवपरात्मतत्त्व मखिलं निर्गच्छतीच्छावशात्
तस्मै दिव्यमहोभृते तव गुरो दण्डाय वन्दामहे ॥७५॥



श्री गु रु का रु ण्य न व र त्न मा ला ।

कारुण्यं हृदये स्थितं तव विभो दीनाननालोकनात्
उद्रिक्तं नयनप्रविष्ट मित उद्गीर्णं कटाक्षच्छलात् ,
संसृत्यार्थततिस्वरूप मुपगम्याशेषदोषार्जितम्
दारिद्र्यं विविधं निहत्य सकलाभीष्टानि दत्ते नृणाम् ॥७६॥

कारुण्यावधि मीक्षितुं क्षम इह स्या त्कोपिवा भूतले
कस्मै चि द्भुव मातनोति विपुलां कस्मै चिदाढ्यं धनम् ,

कस्मै चि द्दिशति प्रभुत्वपदवीं कस्मै चिदाढ्यं यशः
कस्मै चि द्विविधार्थसम्पद मिह त्वत्कारुणी श्रीगुरो! ॥७७॥

कस्मै चि न्निगमागमार्थपटुतां सत्साहितीसम्पदम
कस्मै चि त्सुकवित्वशक्तिकलितां योगश्रियाम्यूर्जिताम ,
कस्मै चि त्तपसः श्रियं श्रुतिशिरस्तत्त्वावबोधामृतम्
कस्मै चि द्दिशति त्वदीयकरुणाश्रीमुक्तिकान्ताऽवरे ॥७८॥

एकस्मै तु कुटुम्बजीवन मथैकस्मै गृहादिश्रियम्
त्वेकस्मै बहुधान्यसम्पद मथैकस्मै कलत्रश्रियम् ,
एकस्मै सुतसम्पदं दिशति चैकस्मै सुधीसम्पदम्
चैकस्मै जयसम्पदं ध्रुव मशेषेभ्योऽपि धर्मोदयम् ॥७९॥

दीने वा विधिदुर्विलासवशगे दूने विपत्पंक्तिभिः
हीने वा रमया गिरा नदुभयानूनेऽपिवा मानुषे,
शिष्टे वा निजधर्मचारिणि ततो भ्रष्टेपि वा ते कृपा
दुष्टे वा कलुषे स्सुपुण्यनिवहैः पुष्टेपि वा स्या त्समा ॥८०॥

कामक्रोधमुखान्तरारिनिवहप्रोद्रेचितोग्रान्तर
प्रारब्धापकृतिप्रकारबहुलन्यक्कारधिक्कारिषु,
आत्मारिष्वपि तावकीनकरुणौदासीन्य मालम्ब्यतान्
पश्चात्तापविशुद्धिशुद्धहृदयान् कृत्वा परित्रायते ॥८१॥

आचार्येन्द्र! भवत्कृपारसमयी शक्ति स्त्वपाङ्गस्थिता
नम्रा न्वीक्ष्य जनान् प्रविश्य हृदयं बुद्ध्या समालोच्य सा,
जिह्वाग्रं गतवत्स्वयेऽभिलषितं किं वेति पृष्ट्वा वयम्
दद्यो वाच मुदीर्य पूरयति तत्सद्यो नृणां कामितान् ॥८२॥

मुक्तिं वाञ्छति चे त्सहस्ततलगा संवत्सरानन्तरम्
वैराग्यादिगुणा न्परीक्ष्य सुदृढा न्मध्ये तु तन्मस्तके,
स्थित्वा ब्राह्म महोपदेशविधिना तत्त्वावबोधामृतम्
दत्वा वाक्यचतुष्टयेन तनुते मुक्तं स्वभक्तं त्विह ॥८३॥

किं नामा तनुते न ते सुकरुणा या बन्धविच्छेदिनी
ब्रह्मानन्दरसप्रदा भवभुजां तापत्रयोन्मूलनी,
अन्या न्पूरयतीह कामनिर्वहान् संसारतापापहान्
इत्यत्वादभुत मेति को वय मिमां याचामहे सन्ततम् ॥८४॥

श्री दि ग्वि ज य च तु ष्ष ष्टी म णि मा ला ।

उत्था योषसि चन्द्रमौलिचरणध्याना त्परं योगतः
कृत्वा कायिककर्मजाल मखिलं स्नात्वा च तप्त्वा तपः,
प्रातः पूजनतः परं श्रितजना याध्याप्य भाष्या ण्यथा
भ्यर्च्येशं क्षुध माशमय्य विबुधै श्शास्त्रार्थ आचिन्त्यते ॥८५॥

भक्तेभ्य स्तु तत स्सुबोधमृदुलै र्देशीयवाग्वाङ्मुखैः
सद्युक्तिस्पुरितैः प्रमाणबहुलै र्लौकानुभूत्याश्रितैः,
धर्मब्रह्मरहस्यबोधनपरै स्साधूपदिश्य स्वयम्
स्नात्वा साय मुपास्य शम्भु मथ तद्ध्याने निशा याप्यते ॥

एवं भूतमहामाहिम्नि महसां राशा वुदञ्च न्महा
विधे लोकमहोपदेशकमहासाम्राज्यलक्ष्मीजुषि
दिव्यात्मीयमहोपदेशसुतपः शैवार्चनैः प्रत्यहम्
छात्रां स्तारयति स्वधाम्नि शरदो याता गुरौ द्वादश ॥८७॥

नानादुष्कलिदुष्टचेष्टितसहस्रोच्छिद्यमानात्मनि
श्रीमद्वैदिकधर्मवर्त्मनिकरे कर्मावनौ भारते,
ता नुद्धर्तु मवातरः किल विभो! श्रीशङ्करोपेक्षसे
किन्विन्त्यर्थनया धरामरबुधां प्रस्थातु मैच्छ दिशः ॥८८॥

इन्द्रत्वं परिवारतो गजमुखा दैश्वर्यतोऽप्यूर्जितात्
वाचा स्वीयसरस्वतीं रसमयी मानन्दसन्दोहिनीम्,
धाम्ना स्वेन च चन्द्रशेखरपदं शक्त्या च मूर्त्या गुरुः
लोकाना मभिलक्षयन् स्वनिलया च्छात्रौघयुङ्निर्ययौ ॥८९॥

सत्स्व प्याधुनिकेषु धूमशकटाद्यारोहयाने ष्वति
क्षिप्रप्राप्यपदोपयापनचणे ष्वाढ्येषु नैच्छ दूगुरु:,
तै र्यातुं निजसम्प्रदायनिगत स्वान्दोलिकामात्रत:
पादभ्यां काचि देतु मैच्छ ऽखिलं श्रीतीर्थराणमण्डलम् ॥९०॥

सर्वार्थावलिसिद्धिदे शुभकरे सिद्धार्थिवर्षेऽश्वयु
ङ्मासे श्रीविजयाभवामलातथौ दिव्ये मुहूर्ते विभु',
श्रीगङ्गादिपवित्रतीर्थविलस त्क्षेत्राटनव्याजत.
नानादिग्विजयाय सानुगपरीवार: प्रतस्थे गुरु: ॥९१॥

कावेरीविरजा सरित्तटलसच्छ्रीरङ्गदिव्यस्थल
श्रीमज्जम्बुकनाथधाममथुरापुर्यादिदिव्यस्थली:,
संसेव्याखिलभक्तलोकनिकर स्वीयोपदेशामृत
सिसञ्चत स्तटखण्डगौरवराजम्भ्रर्चा गृहीत्वा ययु: ॥९२॥

यत्र श्रीरघुनन्दनोऽखिलजगत्पीडाकरं रावणम्
मायाशक्ति मिहात्मनो जनकजां नीत्यात्ममुक्त्यै हठात्,
निर्बध्यात्मगृहान्तरेऽखिलमहाभागान् विसृज्यातुरम्
अन्धान् मोचयितुं निबद्धु मुदधौ सेतुं समारब्धवान् ॥९३॥

य द्दीक्षा द्विजघातशुद्धि रुदिता यन्मज्जना त्पापिनाम्
जाये ताघचयो भवान्तरचितोऽप्युड्डीय खं भस्मसात्,
द्वैतीयीकनिमज्जना त्पुन रिहामुत्रार्थभोगव्रज:
तार्तीयीकनिमज्जना च्चिदनुगश्रीमुक्तिकान्तासुखम् ॥९४॥

श्रीरत्नाकरसन्महोदधिसमाख्यात्मब्धिसङ्गाश्रये
धाम्नि श्रीरघुवीरबन्धितमहासर्गो चतुर्वर्गदे,
पूते शालिशके शराऽब्धिवसुभूख्याते ऽश्वयु क्पूर्णिमा
तिथ्यां दुन्दुभिवत्सरे ऽ विविध तैलुक्का माददु: ॥९५॥

क्षेप्तुं गाङ्गजले यथाव दनले श्रीपुण्यतीर्थव्रज
भ्राज त्क्षेत्रनिकायसेवन मिहाशद्रस्त्राबले भारते,

नानादुर्मतदुष्टलोकनिकरं संशिक्ष्य संरक्षितुम्
धर्मव्रात मशेषभूतलगुरु स्सेतोः प्रतस्थे विभुः ॥९६॥

मध्येमार्ग मशेषसज्जनपदे ष्वभ्यर्हितः पण्डितैः
नानाशास्त्ररहस्यबोधनसुधादानप्रहृष्टात्मभिः
दिव्यब्रह्मकदार्यसङ्कुमतव्यामोहदुष्टात्मनाम्
तत्तद्देश्यनृणां स्ववाङ्मुखशतै श्चेतांसि धर्मे न्यधात् ॥९७॥

ग्रामे वा नगरे न कोपि मनुजः श्रीपादसन्दर्शनात्
पश्चा न्मोहं मसंत्यज न्कलिमते ष्वादृश्यते भारते,
धर्म्ये वर्त्मनि वैदिके निजधियं संवेश्य नाकर्मठः
कोवा नापि च देशिकांघ्रिसरसीजानर्चको नास्तिकः ॥९८॥

अद्वैतं निगमान्तवाक्यगदितं जीवात्मशुद्धात्मनोः
द्वैतं वास्तविकं न मोहजनितं ब्रह्मैक मेवाद्वयम्,
आकाशादिवदत्र भिन्ननिखिलोपाधिप्रवेशार्जित
भ्रान्त्या भिन्न मिवेक्ष्यते तदचितो नाशे त्वभिन्न चिता ॥

भग्नाना मिव पाथसोर्कविधुवद्भयादे रिवोस्रावलेः
भेदो भ्रांतिकृत स्तथात्मनि वहद्द्वैतञ्च मायाकृतम्,
आत्मानात्मविवेचनेन परमात्मात्मावबोधेन च
ध्वान्तं सूर्यमरीचिजालत इव ध्वंसे द्विदा वासना ॥१००॥

इत्याद्यंशमहोपदेशविधिभि श्शास्त्रार्थचर्चायुतैः
साम्नायोक्तिनिदर्शनै रनुभवाधारै स्सुयुक्त्यन्वितैः,
अज्ञानावृतभक्तलोकहृदया न्यावर्जयन्तो भृशम्
जित्वा वादशतै ररीन् दशसमा निन्ये चरन्देशिकः १०१॥

अब्दे श्रीमुखके रसेषुवसुभूसङ्ख्ये च शाले श्शके
श्रीकाशी मुपनिन्यु रागमविधाविद्योतकं श्रीमुखम्,
श्रीविश्वेश्वरमन्दिरेश्वरमुखाभ्यर्णे निजच्छात्रतः
श्रीमन्त्राक्षतपूर्वकं गुरुवराः स्वाचारसंरक्षिणः ॥१०२॥

श्रीविश्वेशालयतारकामठलसत्कर्मन्दिविद्वत्सभा
श्रृङ्गेरीमठपाञ्चगङ्गमठसत्कार्याधिनाथादयः,
श्रीकाशीबुधभूपसंयमिवराः श्रीमत्प्रयागस्थस
द्विद्वांसोऽप्यथ देशिकागमविधावभ्यर्थनां प्रेषयन् ॥१०३॥

दृष्ट्वाभ्यर्थनपत्रमार्यचरणाः प्रस्थाय वाराणसीम्
गन्तुं मद्रपुरात्क्रमेण मकरे श्रीशैलदिव्यस्थलम्,
संसेव्याथ घटस्थिते तु मिहिरे योगाम्बिकापालिताम्
गत्वालम्पुरिकां महाशिवनिशातिथ्यां शिवं शिश्रियुः ॥

स्वर्णग्राममुपेत्य मेषमिहिरे गोदावरीह्रादिनी
माराध्य क्रमशोजबल्पुरगतां रेवां तु युग्मारुणे,
गौरीघट्टतले क्रमेण कटकस्थेऽर्केष्टमे सौमिके
वारे पूततमप्रयागनगरीं श्रीदेशिकाः प्राविशन् ॥१०५॥

तत्रैत दशमीतिथौ त्रिधुजने वारे मुहूर्ते शुभे
गङ्गायां सिकतां प्रचिक्षिपुरुपानीतां धनुष्कोटितः,
पूजापूर्वकमामरज्जुरथच श्रीमत्त्रिवेणीसरि
त्तीर्थे बह्वृचबोधितं तु ददृशुः सोमेश्वरं भास्वरम् ॥१०६॥

चातुर्मास्यमहाव्रताय कटकार्कैकादशाहन्यथो
सङ्कल्प्यात्र च पूर्णिमाशुभतिथौ श्रीव्यासपूजां शुभाम्,
आतेनुर्महतां महेन गुरवः सोमोपरागे महा
पर्वण्यत्र ममज्जुरम्भसि शुचौ त्रैवेणिके सादरम् ॥१०७॥

चातुर्मास्यमहाव्रतेत्र महितश्रीमन्महाध्यापक
स्तोमाखण्डसमस्तदर्शनमहाप्रौढार्थवादाश्श्रुताः,
श्रीमद्वासुकिमौनिचन्द्रिरभरद्वाजाश्रमाद्या महा
पूतश्रीशिवकोटिकाक्षयवटाद्याश्चेक्षिता देशिकैः ॥१०८॥

काशीस्वागतमण्डलप्रतिनिधिप्रख्यातविद्वद्धनि
प्राप्तश्रीनवरात्रकोत्सवविधानाह्वानसम्भाविताः,

कन्यार्के नवमे तु सोमदिवसे श्रीभावत्सरे शुभे
भाद्रे भव्यदविश्वरूपगमनं चक्रे जगद्देशिकाः ॥१०९॥

काशीराजयतीन्द्रचन्द्रविबुधेन्द्रानीकवर्णिव्रज
भ्राजत्स्वागतमण्डलार्थनवशा त्तूर्णं ययासु र्गुरुः,
मुक्तिक्षेत्रगतादरेण पथिकः प्रस्थाप शिष्यै र्वृतः
पञ्चक्रोश मुपाविश त्सहबल स्त्वष्टादशेह्निक्रमात् ॥११०॥

पञ्चक्रोशविवेशनापरदिने श्रीचन्द्रमौलीश्वरा
ल्लोकाना मुपदर्शयन् स्वमहिमाकूतं तिरोभूतवान् ,
आत्माङ्कै स्सहदेवतै र्निजमहापीठ्या मुहूर्ता त्पुनः
श्रीम न्माधवनामभक्तपुरत स्तत्रैव साक्षा दभूत् ॥१११॥

पञ्चक्रोशतलप्रवेशन मथ ज्ञात्वा गुरो रादरात्
स्वामात्यात्मजपण्डितेन्द्रचतुरङ्गानीकभृत्यै र्वृतः,
श्रीनारायणशर्मकाशर्यधिपति श्चागत्यमौलिस्फुरत्
रत्नाल्यंशुचयैः पदाम्बुजयुगं नीराजयामास सः ॥११२॥

सौवर्णैः कुसुमै स्सहस्रकमितै स्स्वैरादरा द्भूपतिः
श्रीमद्देशिकपादपद्मयुगली मभ्यर्च्य पूतात्मवान् ,
काशीसीम्नि तदैकविंशदिवसे स्तोत्रै स्तुव न्देशिकम्
श्रीकाशीनगरीं प्रवेष्टु मधिकप्रह्वार्थयामास सः ॥१०३॥

श्रीकाशीनगरप्रजाप्रतिनिधित्वेनात्मन स्स्वागता
ध्यक्षत्वेन पुनश्च पञ्चशतसङ्ख्याकै र्नृपोरूप्यकैः,
श्रीकाशीस्थविरा ट्सभाविलसितश्रीमण्डपे श्रीपदे
सम्पूज्याय मुपाचरद्बहुविधैः सुस्वागतै र्भाषणैः ॥११४॥

श्रीकाशीनिवस न्महामहमहोपाध्यायमुख्याखिल
श्रीसङ्ख्यावदशेषसंयमिवरप्रख्यातपौरव्रजैः,
श्रीपञ्चाननतर्करत्नविबुधेशाध्यक्ष्यविभ्राजिता
चायास्वागतदिव्यसंसदि महा नात्मोपचारोर्पितः ॥११५॥

शोभायानमहोत्सवोऽखिलमहाराजोपचारै रिह
श्रीकश्यां पुरि पञ्चविंशतिसहस्रान्यूनसन्मानवैः,
दिव्यालङ्कृतिभाजितोरणपताकाद्यै रभूतः पुरा
छन्दस्यश्रुतिघोषणै स्सह महातूर्यस्वनैः कारितः ॥११६॥

श्रीविश्वेश्वरमुख्यदैवतगणश्रीदर्शनानन्तरम्
साङ्गाम्नाय कलालये गुरुवरं प्रावेशय न्नुत्सुकाः,
रात्रौ तत्प्रभुणा मुरारिमेहतानाम्ना त्रिशत्या पद
द्वन्द्वाभ्यर्चनतः परं सदुपदा श्रीपञ्चशत्यार्पिता ॥११७॥

श्रीमत्स्वागतपत्र मर्पित मत स्सर्वै र्विशिष्टै र्महा
विद्वद्भि र्विभुभिश्च धार्मिकवरै स्सर्वै श्च पौरै स्तदा,
नेहे दृग्विहितो महः श्रुतचरो दृष्टोपि वाद्यावधि
श्रीपीठेशबहूकृति र्बहुतरा जाता नजात्वीदृशी ॥११८॥

एकत्रिंशदिनेऽत्र शारदमहापूजान्तपूर्णाहुतौ
चण्डी रुद्रमहाध्वरादिकलितश्रीमातृदिव्याध्वरे,
काष्ठामौनयुते महानवमिकापूजावसाने पुनः
काशीश श्चरणौ सहस्ररजतै रानर्च दिव्यौ गुरोः ॥११९॥

हिन्दूविश्वकलालयाधिपतिभिः श्रीमालवीयादिभिः
मान्यैः स्वागतपत्रिकार्पणयुतो बद्ध स्सभा स्वादरः
ब्रह्मानन्दसरस्वतीयतिविभुश्रीदण्डिबाबाप्रका
शानन्दादिभि रार्यमैथिलिमहाराज्ञ्यादिभि श्चार्चिताः ॥१२०॥

आद्यानां गुरुसार्वभौमभगव च्छ्रीशङ्कराणां यथा
नव्यानां गुरुचन्द्रशेखरयतिश्रीशङ्कराणां यथा,
काश्या मीदृगखण्डवैभवयुतो जातो महा नादरः
नान्येषां जगतीगुरुत्वविलस त्पीठाधिपाना मभूत् ॥१२१॥

केचि त्कूटहृदः कले रनुचरा स्तत्तादृशं वैभवं
काश्यां जात मभूतपूर्व मसह न्दृष्ट्वाऽभ्यसूयान्विताः,

ईर्ष्यावेशकषायिताः कृशधिय श्श्रीकामकोटीमिहा
पीठं शाङ्करमेव नेति परितः पत्राणि सम्प्रैषयन् ॥१२२॥

दृष्ट्वैत त्कालिभृत्यसाहस मलं खिन्नान्तरङ्गा बुधाः
सर्वे काश्यधिपाय धर्मविभवे प्राचीकश न्सम्भ्रमात् ,
श्रुत्वा तद्वचनानि वीक्ष्य नृपतिः पत्राणि संविस्मितः
कुम्भार्केऽहनि पञ्चविंशति मिते प्राचीकरत्सत्सभाम् ॥१२३॥

श्रीमच्छैवरहस्यमुख्यबहुलप्रामाणिकग्रन्थस
न्निर्णीतादिमशङ्करार्चितमहापीठत्वसंस्थापकाः,
अंशा स्तत्र महाविराड्बुधसभामध्ये विमृष्टा बुधैः
तत्तद्ग्रन्थसमीक्षया सुविदितै स्तत्पत्रगा श्चाखिलाः ॥१२४॥

नासी ज्जातु चिदीदृशी बुधसभा काश्यां विराणमन्दिरे
यत्रास न्विबुधाधिपा बहुशताः श्रीसंयमीन्द्रा स्तथा,
सन्तोन्ये तु सहस्रशः कलिचरा स्ते घूकव दूगेहगा
श्श्रीकाशीशसमक्ष मत्र विषयाः ते साधु निर्धारिताः ॥

तत्तद्ग्रन्थगतप्रमाणवचनै राद्यार्यपादै र्महा
पीठानां मिह पञ्चकं सुविहितं स्वाधिष्ठितं तत्रच,
कांचीपीठ मिदं सुरेश्वरभृतं पश्चा त्तदाज्ञावशात्
इत्यंशाः प्रमिताः परोक्ति रसती गर्ह्येति सर्वे वदन् ॥१२६॥

पश्चा त्स्वागतपत्र एव निखिला नंशा नुदाहृत्य ता
न्निर्णीतान् स्वकराक्षरै स्सह गुरुश्रीपादुकासन्निधौ,
पत्रं तत्तु समर्प्यते मुमुदिरे प्रत्यर्थिन स्तेऽरुद
न्नन्तर्दीनमुखाः प्रतिप्रवचनाशक्ता गृहेषु स्थिताः ॥१२७

पश्चा त्तत्सहृदस्तु केचन निजात्याचारनिर्णुत्तये
श्रीमद्देशिकपादवन्दनसमभ्यर्चादिकं तेनिरे,
अन्ये दुष्कलिदुष्टनष्टहृदया रुष्टान्तराः पश्चषाः
दुष्टा न्यात्मविचेष्टितानि न जहु र्भ्रष्टा स्सुदिष्टा द्दहः॥१२८॥

आराध्यामरवर्ग मत्र निखिला न्यासेव्य तीर्थानिचा
प्याभाष्याखिलधर्मतत्त्व मुपदिश्याध्यात्मतत्त्वं गुरु,
अध्युष्यात्र च मासषट्क मुपसंसृत्यागमार्था न्बहून्
संम्मान्याखिलमाननीयविबुधान् सम्प्रस्थिता: श्रीगयाम् ॥१२९॥

श्रीमत्पाटलिपुत्रमार्ग मुपगम्याराध्यमाना नृपै:
र्विद्वद्भि र्धनिभि र्महाजनगणै स्तीर्थामरौघान् श्रयन् ,
क्षेत्रा णीह चरन् श्रय न्नुपदिश न्धर्मा नशेषान् नृणाम्
तत्त्वं चात्मनि उक्षषष्ठदिवसेऽविक्ष द्गयां श्रीगुरु: ॥१३०॥

कर्तव्यं निखिलं विधाय विधिवत्क्षेत्रे गयायां गुरु
र्गृह्णन् विद्वदधीश्वरार्पितमहा सम्मानपत्रावलीम् ,
न्युष्याष्टौ दिवसा न्महोत्सवमहाराजोपचारार्पित:
श्रीकालीपुरधर्मिमण्डलसमाहूत: प्रतस्थे गुरु: ॥१३१॥

नामग्नं वसतीह तीर्थ मवनौ क्षेत्रञ्च नासेवितम्
नादृष्टा अमराश्च सन्ति विबुधा नासत्कृता देशिकै:,
मान्यो नैव धनीच धार्मिकगणो राजा यतिर्वा बुध:
श्रीमद्देशिकसार्वभौमचरणा नाराधकोभू ज्जन: ।१३२॥

एकोने मिथुनार्कगेच दिवसे त्रिंशे जगद्देशिक:
श्रीकालीनगरं विवेश सपरीवारो युवाब्दे शुभे,
चातुर्मास्यमहाव्रताय नवरात्रार्चाविधानाय च
श्रीमद्धार्मिकसङ्घतोषणकृते तत्प्रार्थनाया बलात् ॥१३३॥

श्रीकाश्या मिव कालिकापुरवरे बद्धं महावैभवम्
शोभायानमहादिषु प्रकटितै र्लोकोत्तरै: प्रक्रमै:,
विद्वद्भि र्विभुभि: महासमितिभि र्धन्यैश्च कोटीश्वरै:
नानाधार्मिककोटिभि: कथयितुं कोवा क्षम स्स्या त्कवि: ॥

आचार्याङ्घ्रिसरोजपूजनविधा स्सुस्वागतोपक्रमा
आचार्येन्द्रमहोपदेशनसभासन्धानसम्भावना:,

आम्नायागमतत्त्वचिन्तकसुधीतत्त्वार्थचर्चाविधा
नो दृष्टा नच विश्रुता इह कृता अन्यत्र काशीपुरात् ॥

श्रीकालीनगरे च वङ्गविषयश्रीब्रह्मविद्वत्सभा
तत्काले यजनप्रकाशितकुपत्रस्थाखिलांशव्रजम्,
प्राचीनंप्रमितोक्त्युदायुधमहाधाराभिराच्छिन्द्य सा
सिद्धान्तं निजपत्रिकावदनतोऽवोचच्च काशीगतम् ॥१३६॥

मासानां त्रितयं समुष्य महिते लोकोत्तरे वैभवै
स्तत्प्रान्ताटनपूर्वकं च कलिकातायां जगद्देशिकः,
आराध्याखिलतीर्थदेवानिवहा नाराधिताः सज्जनैः
कन्यार्के विजयैकविंशदिवसे सम्प्रास्थिता स्तत्पुरात् ॥१३७॥

मध्ये ग्रामपुरं महाजनकृता गृह्णन्सपर्यावलीः
क्षेत्रं श्रीपुरुषोत्तमस्य महितं संसेव्य धातुस्समे,
अन्वर्थाभिधमुक्तिमण्डपमहाविद्वत्सभामानितः
चातुर्मास्यमहाव्रतं प्रविदधौ श्रीब्रह्मपुर्यां गुरुः ॥१३८॥

श्रीविद्यानगरीति विश्वविदिता विद्वन्नृपैः पालिता
विख्याते विजयश्रिया परिवृते रान्ध्राचलालंक्रिया,
या पूः श्रीविजयाभिधा विजयते तद्भूपतिप्रार्थितोऽ
नुष्ठातुं नवरात्रसन्मख मिह प्राप्ता दितो देशिकः ॥१३९॥

काशीभूपतिवत्स्ववैभवयुत स्सीमान मेत्य प्रभुः
प्रत्युद्याय समर्च्य पत्तनवरं सम्प्रापय देशिकम्,
शोभायानमुखैः प्रशंसकसभापत्रार्पणाद्यै र्महैः
काश्यादी ननुकूल्य नैजविबुधै स्साकं व्यथा दादरम् ॥१४०॥

कालेयप्रहिताद्यपत्रविषयव्रातं विमृश्याखिलम्
विख्याता विबुधाः प्रखण्ड्य बहुधा काश्यादिवन्निर्णयम्,
स्वीयं स्वागतपत्र एव सकलं संक्षिप्य विद्वत्सभा
मध्ये श्रीगुरुपादपद्मनिकटे प्रत्यार्पिप न्नादरात् ॥१४१॥

कृत्वा श्रीनवरात्रपूजन महं सम्भाविता वैभवैः
श्रीमत्पादसरोजपूजनमुखैः प्रस्थाय पश्चा त्ततः,
श्रीवैशाखपुरादिमार्गत इमे सम्भाव्यमानाः क्रमात्
ग्रामे ष्वाढ्यपुरेषु चाययु रिहैं श्रीसप्तगोदातटम् ॥१४३॥

ग्रामः श्रीचरणाम्बुजातयुगला नाराधकः कोपिवा
नैवासीत्तु तथा नं किञ्चन पुरं क्षेत्रञ्च नासेवितम्,
तीर्थं वाऽमरसद्मवा गुरुपदै र्नापावितं वेश्म वा
धन्यानां धनिनां सता मिह गृहस्थाना म्महाधर्मिणाम् ॥

यत्राद्यापि परश्शता बुधवराः शिष्टाश्च साधुव्रताः
यज्वानो निगमागमार्थनिपुणा धर्म्या स्तपश्शालिनः,
ग्रामे ग्राम उदारशीलकलिता स्सद्ब्रह्मवर्चस्विनः
साध्वाचारविदो वसन्ति धरणीदेवाश्च साध्व्यः स्त्रियः ॥१४४॥

यत्रारामशतानि नन्दनवनस्पर्धीनि केदारभूः
बह्वीदिव्यसरांसि मानसपरिस्पर्धीनि सर्वाः श्रियः,
मध्ये कौशिकनिम्नगा प्युभयतो गोदावरी सर्वतः
कुल्याः कूपमुखाश्च दिव्यतरवो देवाश्च सर्वेऽवसन् ॥१४५॥

यत्राद्या प्यनुवत्सरं क्रतुवरे ष्वश्नन्ति देवाहवीं
ष्याम्नयागमसत्पुराणनिनदै र्जोघुष्यते यस्सदा,
सत्कर्माणि महाकलावपि यतो जीवन्ति चाद्याखिल
प्रष्ठे श्रीमति कोनसीम्नि गुरवो मासाष्टकं संस्थिताः ॥

श्रीकाश्या मिव कालिकापुर इव प्रख्यातविद्वद्वर
न्यायव्याकृतिवेदमस्तकमुखप्रौढार्थचर्चा श्श्रुताः,
आम्नायार्थरहस्यजाल मखिलं श्रीब्रह्मसप्ताहके
श्रुत्वा सर्वबुधा न्यथोचितबहूकारै रिहातर्पयन् ॥१४७॥

श्रीरारामपुरी महाजनधनाह्वानार्थनानां बलात्
वासिष्ठी मिह सम्प्रतीर्य गुरवो याताः पुरीं तां क्रमात्,

चातुर्मास्यमहाव्रतं सुमहता संरम्भतोनुष्ठितम्
भव्ये चेश्वरवत्सरे बुधसभासम्मानमुख्यै र्मुदा ॥१४८॥

श्रीमद्धोतृकुलप्रदीपविबुधप्रह्वार्यचूडामणि:
ग्रामधीश्वरवीरभद्रविभुना सम्प्रार्थिता देशिका:,
तद्ग्रामे नवरात्रकव्रत मथा न्वष्ठा द्दुधुकुम्पेटके
काष्ठामौनमुखे र्यथाव द्खिलै र्यागैश्च पूजादिभि: ॥१४९॥

पश्चा द्राजमहेन्द्रपत्तनमुखे ष्वाकारिता गौतमी
तीरे न्युष्य च मासषट्क मसकृ त्सम्मानिता स्तै र्मुदा,
श्रीमद्गर्तपुरी महाजनमहोत्साहार्थना त्तत्पुरीम
चातुर्मास्यमहाव्रताय बहुधान्याब्दे गता देशिका: ॥१५०॥

आर्यै र्नागरकै रिहोद्धतमहोत्साहेन दिव्योत्सवै:
चातुर्मास्यमहाव्रतं गुरुवरै स्तत्साध्वनुष्ठापितम्,
तत्रैक: कलितोषको यतिपदी सर्वार्यगर्हाचण:
दुष्पत्राणि निनाय शिष्यमुखतो जिग्यु स्स्वयं मौनिन: ॥

श्रीमार्कापुरनाम्नि धार्मिकपुरे तत्पौरसम्प्रार्थित:
गत्वा श्रीनवरात्रकव्रत मनुष्ठायाखिलां स्तोषयन्,
श्रीमात्सिंहपुरीं गतो जनपदे ष्वाराध्यमान: क्रमात्
याचान्ध्रावनिमण्डलस्य निखिलस्यास्ते मणीभूषणम् ॥१५२॥

विद्याभि र्विनयेन धर्मधिषणाप्राबल्यतो नीतित:
सर्वश्रीभि रशेषसद्गुणगणै र्याचातिशेते पुरी:,
या माक्रान्तु मधर्मवर्धनपरो भीत: कलि: कुत्रचित्
लिल्ये स्वानुचरालिसद्मसु यथा घूको रवे स्तेजस: ॥१५३॥

तत्रानुत्तरगौरवै रनुदिनाबद्धै र्महावैभवै:
धर्मब्रह्मरहस्यवेदनसभासन्मानकै र्धर्मिणाम्,
धर्माधर्मपरात्मतत्त्वमहितस्वीयोपदेशामृतै:
आसिञ्च्यात्र तु मासपञ्चक मुषित्वा ते ततो निर्गता: ॥

श्रीमद्वेङ्कटगिर्यधीश्वरसमभ्यर्चां गृहीत्वा पुनः
संसेव्यात्ममहाविभूतिकलितश्रीकालहस्तीश्वरम् ,
भृगक्षेत्रवरे च शङ्करजयन्त्याढ्ये दिने शाङ्करीम्
प्रतिष्ठा प्रतिमा मिहालयवरे भक्त्या स्वयं देशिकः ॥१५५॥

कालेयाखिलपापभञ्जकतयाऽन्वर्थाभिधं देशिकः
श्रीमद्वेङ्कटनाथ मादरभरीतात्मा समाराध्य तम् ,
श्रीकाञ्चीनगरी मुपेत्य महिता मेकाम्रनाथप्रियाम्
कामाक्षी मभिवीक्ष्य तत्र कतिचि त्तस्थौ दिनान्यात्मवान् ॥

आराध्यातितरां पुराणमिथुनं कुम्भाभिषेकोत्सवम्
कर्तुं चेतसि सम्प्रधार्य नितरां कार्याधिकारित्रजम् ,
निर्णीयौपयिकं महाजनसमूहाभ्यर्थितो निर्ययौ
श्रीरामेश्वरदिव्यसेवनकृत गङ्गाभिषेकादिना. ॥१५७॥

मध्ये मार्ग मनेकतीर्थविलस त्क्षेत्राणि संसेव्यते
विद्वद्भि र्विभुभि र्महाजनगणै रभ्यर्चितोऽत्यादरात् ,
श्रीमद्देशिकचन्द्रशेखरयतिश्रीपूज्यपादाः प्रभा
ववज्येष्ठसिते ययु स्सहपरीवारास्सुरामेश्वरम् ॥१५८॥

स्नात्वा तत्र समस्तपावनधनुष्कोटौ जगद्देशिकाः
कर्तव्यं विविधं विधाय च पुना रामेश्वरायाः ययु ,
तत्रासेव्य समस्ततीर्थनिवहं श्रीरामलिङ्गेश्वरा
यानीतां समसेचयन् सुविधिव द्गङ्गां जगत्पावनीम् ॥१५९॥

कर्तव्यश्च परं यथा विधिकृतं कुम्भाभिषेकादिकम्
दिव्यै रात्ममहाविभूतिकलितै स्सद्वैभवै रादरात् ,
आसेव्यातितरां शिवौ बहुविधै रात्मोपचारै र्विभुः
सन्तोष्याखिलतीर्थवासिनिवहं यात्रां समग्रां व्यधात् ॥१६०॥

श्रीरामेश्वरपावनावनितला दाषाढशुक्ले पुनः
प्रस्थाय क्रमशः त्रयोदशदिने स्वस्थानमाया द्गुरुः,

चातुर्मास्यमहाव्रतं निजमठे श्रीकुम्भघोणेऽधुना
श्रीमद्देशिकसार्वभौमभगवत्पादै रनुष्ठीयते ॥१६१॥

आन्ध्रे श्रीसप्तगोदावरतटविलसत्कौशिकीतीरराज
न्मुङ्गण्डाभिख्यविद्वद्वरवसतिलस न्मौनिखण्डात्तवासः
धर्मोपन्यासिवैयाकरणकुललस त्केसरीति प्रथावा
नात्रेयोमामहेशो विबुधकविमणिः पुल्यकुल्यावतंसः ॥१६२॥

तेन श्रीवृत्तरत्नै र्गुरुगुणनिवहस्वर्णसूत्रे निबद्धैः
सूक्तिश्रीसूचिकाभि र्निशितमतिमहाहीरकोत्कीर्णरन्ध्रैः,
भक्तिश्रद्धाढ्यशाणोत्कषणसमधिकद्योतिवृत्तांशुजालैः
बद्ध श्श्रीरत्नहारो जयतु गुरुवरा यार्पितो भूतलेऽस्मिन् ॥१६३॥

बाल्ये श्रीजम्बुनाथप्रियतममहिषी जीर्णताटङ्करूप
श्रीचक्रोद्धारकाणां सकलनिगमषड्दर्शनी देशिकानाम्,
प्रौढत्वे तीर्थयात्रोपथिकनिखिलदिग्जैत्रयात्रार्चितानाम्
नव्यश्रीशङ्कराणां चरणकमलयो रर्पितो रत्नहारः ॥१६४॥

श्रीचन्द्रशेखरयतीन्द्रसरस्वतीश
पूज्याङ्घ्रिपद्मसविधे मणिहार मेतम्,
दिव्योपहार मुपधाय महायशस्त्वं
धन्यासि देवि कविते! चारितार्थजाता ॥१६५॥

हृद्यै स्सुवर्णकलितैः प्रतिभाविभाद्भिः
पद्याभिधै र्मणिभि राढ्यरसार्णवोत्थैः,
सद्यो रसज्ञहृदयावलिकर्षकै स्त्व
मद्यासि हारकलना त्कविते ऽतिधन्या ॥१६६॥

श्रीचन्द्रशेखरजगद्गुरुसार्वभौम
दिव्यावतारमुखदिग्विजयान्तवृत्तैः,
षण्ट्युत्तरै श्शतमितै र्घनपद्यरत्नै
र्हारो महा न्विरचितो विदुषां मुदेऽस्तु ॥१६७॥

श्रीचन्द्रशेखरजयाभिदरत्नहारो
हारावली कलित एष महा न्मनोज्ञः,
सर्वज्ञदेशिकवरेणयहृद्ब्जशोभी
जेगीयता मिह रसज्ञमनांसि कर्षन् ॥११८॥

श्रीकोनसीम्नि बुधमण्डलमण्डितेऽस्मिन्
मुङ्गण्डनाम्नि मुनिखण्डमहाग्रहारे,
अब्दे प्रमाधिनि शुचौ ग्रथिता मणिस्र
ग्लक्ष्मीनृसिंहबुधसूनुमहेश्वरेण ॥११९॥

जयतु जयतु काञ्चीकामकोटीसुपीठम्
जयतु जयतु तस्याधीश्वरो देशिकेन्द्रः,
जयतु जयतु धर्मो रक्षित स्तेन भूमौ
जयतु जयतु सर्वाधीश्वरः श्चन्द्रमौलिः ॥१२०॥

इतिश्रीमदात्रेयगोत्रपवित्रश्रीलक्ष्मीनृसिंहविबुधेन्द्रपुत्र 'श्रीधर्मस्थापक, वि-
द्वत्कविरत्न, वैयाकरणधर्मोपन्यासिकेसरि' पुल्योपनामकोमामहे
श्वरशास्त्रिकृतिषु श्रीचन्द्रशेखरविजयमहारत्नहारः श्री श्री श्री
चन्द्रशेखरेन्द्रसरस्वतीसंयमीन्द्रश्रीचरणसरासिजसम
र्पितो विजयतेतराम् ॥

विजयतां श्रीयोगचन्द्रमौलीश्वरः ॥



## साध्वसाधुपट्टिका ॥



| पत्रे | पंक्तौ | | पाठ्यम् | पत्रे | पंक्तौ | | पाठ्यम् |
|---|---|---|---|---|---|---|---|
| १ | ६ | ि्त्र | १५ | १२ | १२ | ति | १९ |
| १ | १४ | ष्टि | १८ | ,, | १५ | श म | १०-११ |
| २ | ७..२० | श्रीषष्ट्युत्तर | | ,, | २६ | म | १५ |
| ५ | २१ | सि | १८ | १५ | २२ | त | ९ |
| ६ | २ | धा | १७ | १६ | ५ | ष्टि | ९ |
| ६ | ३ | शि | ११ | १७ | १२ | न्त | ३ |
| ६ | ९ | ना | १४ | १८ | २३ | डूख्ये | १४ |
| ६ | १५ | र्व | १५ | १९ | ४ | प्रै | १५ |
| ७ | १० | स्स | १३ | १९ | १५ | मृ | ८ |
| ८ | २४ | दा | २ | २० | ९ | दै | ६ |
| ९ | ७ | ध | ३ | २१ | ३ | ङ्कु | ४ |
| ९ | ७ | ङ्घ्र | १५ | २१ | २० | यिल | ९-१० |
| ९ | १६ | त्क | १७ | २२ | २५ | ष्ट | ७ |
| १० | १४ | त्क | १४ | २३ | ६ | र्या | १४ |
| १० | २१ | ह्य | १५ | २३ | ११ | र्चि | १८ |
| ११ | १ | यो | ६ | २३ | २५ | ङ्घ्र | ४ |
| ११ | ११ | कि | ११ | | | | |

अत्रान्येऽक्षरस्खालित्यादयो दोषा गुणग्राहिभिः क्षन्तव्याः ॥

